वेनाभावबुद्धौ कारणत्वात् द्वैतस्यानिर्वचनीयत्वाङ्गीकारेण प्रत्यक्षादिवेद्यत्वान्निषेधोपपत्तिरित्यर्थः। तर्हि तादृश आत्माङ्गुलिनिर्देशेन प्रतिपाद्यतामिति। नेत्याह—कथं ब्रवीमीति। किमाक्षेपे। अद्वैतकत्वेन वागविषयत्वात्। 'अवचनेनैव प्रोवाच यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। न विज्ञातेर्विज्ञातारं विजानीया'दित्यादिश्रुतिभ्यः। वागविषयत्वे वेदान्तानां कथं तत्र प्रामाण्यमिति चेन्न। अविषयेऽप्यात्मनि तदाकारवृत्तिमात्रेण तदविद्यानिवर्तकत्वादित्याह—सर्ववेदान्तसिद्धमिति। तथा च श्रुतिः—'यस्यामतं त-

---

तत्र प्रमात्वनिश्चयेऽसत्यप्यभावज्ञानोदयेनानावृतप्रमात्वेन हेतुत्वास्वीकारात् अनावृतप्रमात्वयिप्रातीतिकसंसर्गस्य भ्रमेऽपि सत्त्वेनाप्रमात्वनिश्चयाभावकाले भ्रमादप्यभावबुद्धिसम्भवेन च भ्रमसाधारणकारणतासम्भवेनास्मदिष्टाविघाताच्च ज्ञानस्यैव कारणत्वात् द्वैतस्य प्रत्यक्षादिवेद्यत्वाच्च निषेधोपपत्तिरिति योजना। ननु प्रत्यक्षादिप्रमाणवेद्यस्य कथं निषेधस्तत्राह—अनिर्वचनीयत्वाङ्गीकारेणेति। मिथ्यात्वस्वीकारेणेत्यर्थः। तथा च प्रत्यक्षादीनां न तात्त्विकं प्रामाण्यम्। येन निषेधविरोधः। किं तु व्यावहारिकमिति भावः। अङ्गुलिनिर्देशेन प्रमाणफलविषयतया। अद्वैतकत्वेन वागविषयत्वादिति। अद्वैतकत्वात् स्वसमानसत्ताकद्वैतविशिष्टदृश्यभिन्नत्वे वागादिप्रमाणफलाविषयत्वमित्यर्थः। अवचनेन वचनं विनैव। प्रोवाच ज्ञापितवान्। वचनस्य मुख्यवृत्तेर्ब्रह्मण्यसम्भवात् तत्र तत्फलाविषयत्वाच्च लक्षणावृत्त्या बोधनप्रकारस्य दुर्बोधत्वाच्च गुरुणा शिष्यपृष्टेन वचनं नोक्तम्। तादृशं च गुरोरभिप्रायमजानन् शिष्यः पृष्टवान्। ततो गुरुराह—'ब्रूमः खलु उपशान्तस्वभावो ह्ययमात्मे'ति। तस्यायमर्थः—ब्रूमो वचनमनुक्त्वैव त्वां ज्ञापयामः। अयमात्मा वचनमुख्यवृत्त्यविषयत्वात् प्रमाणफलाविषयत्वाच्चोपशान्तस्वभावः। स्वाभाविकेन द्वैतसम्बन्धेन विशिष्टात् दृश्याद्विलक्षण इति। निवर्तन्ते फलविषयतया बोधनासमर्थाः। अप्राप्य फलविषयत्वद्वारकसम्बन्धेनासम्बध्य। विज्ञातेः मनोवृत्तिरूपज्ञानस्य। विज्ञातारं स्वप्रकाशसाक्षिणम्। अविषये फलाविषये। तदाकारेति। शुद्धात्माकारेत्यर्थः। तथा च तत्र प्रामाण्यं तदाकारप्रमाकरणत्वम्। न तु तद्विषयकफलकरणत्वमिति भावः। तदुक्तं 'ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते। फ-

स्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् । यन्मनसा न मनुते येनाहुर्मनो मतम् ।'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत'इत्यादिरविषयत्वमात्मनो दर्शयति । तदेवं वेदान्तवाक्यजन्याखण्डाकारवृत्त्या अविद्यानिवृत्तौ तत्कल्पितसकलानर्थनिवृत्तौ परमानन्दरूपस्सन् कृतकृत्यो भवतीति सिद्धम् ॥

न स्तौमि तं व्यासमशेषमर्थं समग्रसूत्रैरपि यो बबन्ध ।
विनापि तैस्सङ्ग्रथिताखिलार्थं तं शङ्करं नौमि सुरेश्वरं च ॥ १ ॥
लघुरपि बह्वर्थवहश्चिन्तामणिरिव निबन्धोऽयम् ।
मधुसूदनेन मुनिना विहितो गुणिनां विनोदाय ॥ २ ॥
यदत्र सौष्ठवं किञ्चित्तद्गुरोरेव मे न हि ।
यदत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्न हि ॥ ३ ॥

---

लव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् ॥ इति । वेदान्तसिद्धं वेदान्तवाक्यजन्यवृत्तिप्रयुक्ताज्ञानतत्प्रयुक्तोच्छेदवत् । अमतं परोक्षप्रमाणफलाविषयत्वेन ज्ञातम् । मतं उक्तफलविषयत्वेन ज्ञातम् । विजानतां प्रत्यक्षप्रमाणफलविषयत्वेन जानतां पुरुषाणाम् । अविज्ञातं चैतन्याविषयत्वरूपस्वप्रकाशत्वेनाज्ञातम् । अविजानतां उक्तफलविषयत्वेनाजानताम् । विज्ञातं उक्तस्वप्रकाशत्वेन ज्ञातुं शक्यम् । मनुते फलविषयीकरोति । तदेव फलाविषयीभूतम् । उपासते श्रुत्यादिप्रमाणेन तत्तद्गुणवत्तया फलविषयरूपेण जानन्ति । **अविषयत्वमिति** । चिद्रूपस्यैव मुख्यज्ञानरूपत्वेन तदीयसम्बन्धस्यैव मुख्यविषयतारूपत्वेन तत्सामान्याभावं फलविषयत्वनिराकरणद्वारा दर्शयति । वृत्तेराकाराख्यसम्बन्धस्तु न मुख्यविषयतेति तस्याः ब्रह्मणि स्वीकारेऽपि न विरोध इति भावः । **विनापि तैरिति** । सूत्रशब्दस्य तन्तौ सङ्ग्रहवाक्ये च प्रयोगात् श्लेषमूलको व्यतिरेकालङ्कारोऽयम् । सूत्रैरपि व्यासस्सर्वार्थान् न बबन्ध न सङ्गृहीतवान् । शङ्कराद्याचार्यास्तु सूत्राण्यनाश्रित्यापि सर्वार्थान् सङ्गृहीतवन्तः सूत्रानुक्तार्थानामपि वक्तृत्वादित्यर्थः । लघुः

बहुयाचनया मयाऽयमल्पो बलभद्रस्य कृते कृतो निबन्धः ।
यदत्र दुष्टमिहास्ति यच्च दुष्टं तदुदारास्सुधियो विवेचयन्तु ॥ ४ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीभगवत्पाद-
पूज्यशिष्यश्रीमधुसूदनसरस्वतीविरचितः सिद्धान्तबिन्दु-
नामग्रन्थः समाप्तः ।

ॐ

---

अतिस्वल्पः । बह्वर्थवहः प्रापकः । निबन्धः ग्रन्थः । अत्र ग्रन्थे । सौष्ठवं गुणवत्त्वम् । बलभद्रस्य आचार्याणां सेवकब्रह्मचारिणः ॥

श्रीनारायणतीर्थानां गुरूणां चरणांबुजम् ।
नमामि वाङ्मनःकायैरनन्यशरणैस्सदा ॥
भजे श्रीपरमानन्दसरस्वत्याः पदांबुजम् ।
यदेवालम्ब्य संसारसागरो गोष्पदीकृतः ॥

इति श्रीब्रह्मानन्दसरस्वतीविरचिता
सिद्धान्तबिन्दुटीका
न्यायरत्नावली
समाप्ता

ॐ

